☞ एतेषु वाक्येषु शतृप्रत्ययान्तानां रूपाणां प्रयोगः विभिन्नासु विभक्तिषु कृतः अस्ति । तानि सावधानं पठत, अवगच्छत च –

१. छात्र: विद्यालयं गच्छति = छात्र: विद्यालयं गच्छन् अस्ति । अहं छात्रं मार्गं पृच्छामि ।
विद्यालयं गच्छन् छात्र: अस्ति । अहं तं छात्रं मार्गं पृच्छामि ।
अहं कीदृशम् छात्रं मार्गं पृच्छामि ?= विद्यालयं गच्छन्तं छात्रं मार्गं पृच्छामि ।

1. अहं विद्यालयं गच्छन्तं छात्रं मार्गं पृच्छामि ।

2. रमेशः ओदनं पचन्तीं भगिनीं प्रशंसति ।

२. भगिनी ओदनं पचति (पचन्ती अस्ति) । रमेश: भगिनीं प्रशंसति ।
रमेश: कीदृशीं भगिनीं प्रशंसति? ओदनं पचन्तीं भगिनीं प्रशंसति ।

3. शिक्षिका क्रीडतः बालकान् आह्वयति ।

३. बालका: क्रीडन्ति । शिक्षिका बालकान् आह्वयति ।
क्रीडन्त: बालका: सन्ति । शिक्शिका कीदृशान् बालकान् आह्वयति ?
शिक्षिका क्रीडत: बालकान् आह्वयति ।

4. यात्रिकाः जले तरन्तीः नौकाः पश्यन्ति ।

४. जले नौका: तरन्ति । यात्रिका: नौका: पश्यन्ति ।
यात्रिका: कीदृशी: नौका: पश्यन्ति ?= जले तरन्ती: नौका: पश्यन्ति ।

5. माता क्रीडता बालकेन सह सम्भाषणं करोति ।

५. बालक: क्रीडति । माता बालकेन सह ...
माता कीदृशेन बालकेन सह ... = क्रीडता बालकेन सह ..

6. विद्यालयं गच्छन्त्या छात्रया गीतं गीयते ।

६. छात्रा विद्यालयं गच्छ्ति । छात्रया गीतं गीयते ।
कीदृश्या छात्रया ? विद्यालयं गच्छन्त्या छात्रया ...

7. अग्रजः हसते बालकाय मोदकं ददाति ।

७. बालक: हसति (हसन् अस्ति) अग्रज: बालकाय मोदक ददाति ।
अग्रज: कीदृशाय बालकाय...? अग्रज: हसते बालकाय ....

8. पूजकः देवं प्रणमद्भ्यः भक्तेभ्यः प्रसादं वितरति ।

८. भक्ता: देवं प्रणमन्ति (प्रणमन्त: सन्ति) ।पूजक: भक्तेभ्य: प्रसादं वितरति ।
पूजक: कीदृशेभ्य: भक्तेभ्य: ..... = प्रणमद्भ्य: bhaktebhya:

9. भवती लिखन्तीभ्यः छात्राभ्यः दुग्धं ददातु ।

९. छात्रा: लिखन्ति (लिखन्त्य: छात्रा:) । भवती छात्राभ्य: ...
कीदृशीभ्य: छात्राभ्य: .... = लिखन्तीभ्य: छात्राभ्य: ...

10. लिखते गोविन्दाय लेखनी रोचते ।

१०. गोविन्द: लिखति (लिखन् गोविन्द: asti) । गोविन्दाय लेखनी रोचते ।
कीदृशाय गोविन्दाय ...? = लिखते गोविन्दाय लेखनी रोचते ।

11. शास्त्रं बोधयद्भ्यः गुरुभ्यः नमः ।

११. गुरव: शास्त्रं बोधयन्ति (शास्त्रं बोधयन्त: गुरव: सन्ति) । गुरुभ्य: नम: ।
किदृशेभ्य: गुरुभ्य: नम: ? = शास्त्रं बोधयद्भ्य: गुरुभ्य: नम: ।

12. सैनिकः धावतः अश्वात् पतति ।

१२. अश्व: धावति (धावन् अश्व: अस्ति) । सैनिक: अश्वात् पतति ।
सैनिक: कीदृशात् अश्वात् पतति ? = सैनिक: धावत: अश्वात् पतति ।

13. चोराः अनुधावद्भ्यः आरक्षकेभ्यः बिभ्यति ।

१३. आरक्षका: अनुधावन्ति । चोरा: आरक्षकेभ्य: बिभ्यति ।
चोरा: कीदृशेभ्य: आरक्षकेभ्य: बिभ्यति ?
चोरा: अनुधावद्भ्य: आरक्षकेभ्य: बिभ्यति ।

14. पुत्र ! अत्र आगच्छन्त्याः शाकविक्रेत्र्याः कर्कटीं क्रीणातु ।

१४. शाकविक्रेत्री आगच्छति (आगच्छन्ती शाकविक्रेत्री अस्ति) । तस्या: कर्कटीं क्रीणातु ।कीदृश्या: शाकविक्रेत्र्या: क्रीणातु? = आगच्छन्त्या: शाकविक्रेत्र्या: ... क्रीणातु ।

15. एषः विद्याालयं गच्छतः बालकस्य स्यूतः अस्ति ।

१५. बालक: विद्यालयं गच्छति । एष: बालकस्य स्यूत: अस्ति ।
एष: कीदृशस्य बालकस्य स्यूत: अस्ति ? =
विद्यालयं गच्छत: बालकस्य स्यूत: अस्ति ।

16. सङ्गीतशालां गच्छन्तीनां बालिकानां हस्ते वीणाः सन्ति ।

१६. बालिका: सङ्गीतशालां गच्छ्न्ति । बालिकानां हस्ते वीणा: सन्ति ।कीदृशीनां बालिकानां हस्ते वीणा: सन्ति ? = सङ्गीतशालां गच्छन्तीनां बालिकानां हस्ते वीणा: सन्ति

17. न्यायालये वदताम् अधिवक्तॄणां युतकानि कृष्णानि वर्तन्ते ।

१७. अधिवक्ता न्यायालये वदति (न्यायालये वदन् अधिवक्ता) । अधिवक्तृणां युतकानि कृष्णानि वर्तन्ते । कीदृशानां अधिवक्तृणां युतकानि कृष्णानि वर्तन्ते ?
न्यायालये वदताम् अधिवकृणां युतकानि कृष्णानि वर्तन्ते ।

18. पठत्सु बालकेषु रमेशः चतुरः अस्ति ।

१८. बालका: पठन्ति । रमेश: बालकेषु चतुर: अस्ति ।
कीदृशेषु बालकेषु बालक: चतुर: अस्ति ? = पठत्सु बालकेषु ...

19. चरन्तीषु धेनुषु कपिला अधिकं दुग्धं ददाति ।

१९. धेनव: चरन्ति (चरन्त्य: धेनव: सन्ति) । धेनुषु कपिला अधिकं दुग्धं ददाति ।
कीदृशीषु धेनुषु कपिला अधिकं दुग्धं ददाति ? चरन्तीषु धेनुषु कपिला अधिकं दुग्धं ददाति

20. शिशुः दुग्धं पाययन्त्यां मातरि स्निह्यति ।

२०. माता दुग्धं पाययति (दुग्धं पाययन्ती माता अस्ति) । शिशु: मातरि स्निह्यति ।
शिशु: कीदृश्यां मातरि स्निह्यति ? दुग्धं पाययन्त्यां मातरि स्निह्यति ।